

# भाजपादलस्य डॉवीके सिंहः विजय गौरवं आप्तवान्

**प्रयागराजः। वार्ताहरः।** अद्य निर्वाचन प्रक्रियान्तर्गते प्रयागराजस्य जिला पंचायत अध्यक्षपदाय सम्पन्ने मतदान कार्यक्रमे प्रतिस्पर्धात्मके वातावरणे अन्ततः भाजपा दलस्य अधिकृतः प्रत्याशी डॉवीके सिंहः स्व विपक्षीं सपा प्रत्याशीं मालती यादवं 18 मतैः पराजित्य विजय गौरवं आप्तवान। अस्मिन् निर्वाचने डॉवीके सिंहः 51 मताः, मालती यादवश्च 33 मताः प्राप्तवन्तौ। जिला पंचायत परिसरे भाजपादले उल्लासमयं वातावरणं परिव्याप्तम्।

छायाकारः सौरभ कुमार

# च्युतिर्लग्नाज्ज्ञेया हिबुकगृहतो वृद्धिरुदिताप्रवासः, स्यान्मध्याद्भवति विनिवृत्तिः स्मरगृहात्

स्त्रिया अथवा पुरुषेन स्वजनसमुदायं परित्यज्य अन्यस्थाने प्रस्थानं क्रियते, किञ्चित् कालं यावत् तयोः सङ्केतः न लभ्यते, पत्रमपि नागच्छेत् तर्हि गृहजनाः अतीव दुःखिता भवेयुः। तदा चिन्तामग्नाः ते ज्योतिषसमीपं गत्वा तेषां नाम पलायितजनानां क्षेमवार्तां पृच्छन्ति। एवंरूपप्रश्नः आगमनप्रश्नः इत्युच्यते। एतस्मिन् विषये पण्डितरुद्रमणिः प्रश्नशिरोमणिग्रन्थे एवमकथयत्-तनुपतिस्तनुतुर्यगतेन चेन्मुत्थसिलं विदधाति तथांगपः। कुरिल केन्द्रेगत स्तनुमीक्षते स सुखमेति तदा पथिको ध्रुवम्। अर्थात् लग्नेशः यदि लग्नस्य अथवा चतुर्थग्रहेण सह इत्थसालं करोति अथवा वक्रीलग्नेशः केन्द्रे स्थित्वा लग्नं पश्यति तर्हि पथिकः सुखपूर्वकरूपेण आगच्छेत्। अस्मिन् श्लोके केन्द्रस्थानम् अतिमुख्यमिति मन्यन्ते। अस्य विवरणम् आचार्यवराहमिहिरः एवमवदत् - लग्नात् च्युतिः, चतुर्थभावात् बुद्धिः दशमभावात् प्रवास एवं सप्तमभावात् निवृत्तेः विचारः करणीयः। प्रश्नसमये एतेषु भावेषु स्थितग्रहाणामनुसारेण समस्त शुभाशुभफलं वक्तव्यम्। चतुर्थभावे शुभग्रहस्थिते प्रवासी स्वगृहम् आगतवानिति वक्तव्यम् -

च्युतिर्लग्नाज्ज्ञेया हिबुकगृहतो वृद्धिरुदिताप्रवासः
स्यान्मध्याद्भवति विनिवृत्तिः स्मरगृहात्।
गृहैरेतत्प्रश्नोदयसमयगैवच्यिमखिलं प्रविष्टः
स्वं गेहं हिबुकगृहगे प्रोषितपुमान्।

अस्मिन् श्लोके लग्नभावात् च्युतेः विचारः कथितः। अर्थात् अधिकार-त्याग-पदहानि-स्थानान्तरण-वर्षागमन एवं बन्धविमोचनम् इत्यादयः प्रश्नच्युतेः मूलकानि भवन्ति। चतुर्थस्थाने बुद्धेः विचारः उक्तोऽस्ति। अर्थात् पदवृद्धिः-अधिकारवृद्धिः-धनवृद्धिः-यशोवृद्धिः एवं न्यायस्थानम् अथवा मित्रं वा दम्पतिलाभाः इत्यादयः वृद्धिमूलकप्रश्नाः भवन्ति। दशमभावात् प्रवासविचारः करणीयः अर्थात् यात्रा, विदेशगमन, यात्रायां सुख.दुःख एवं लाभ-हानि इत्यादयः प्रश्नाः प्रवासमूलकाः भवन्ति। सप्तमभावात् निवृत्तेः विचारः करणीयः। अर्थात् यात्रातः पुनरागमनं, रोगान्मुक्तिः, मृत्यु-कष्टनिवृत्तिः तथा तस्करित अपगतवस्तुप्रापणम् इत्यादयः प्रश्नाः निवृत्तिमूलकाः भवन्ति। एवंरूपेण तस्य ग्रन्थस्य व्याख्याकारः ''डॉ. शुकदेवचतुर्वेदी'' कथयति -

तनुधनसहजस्थाः सर्वखेटा यदि स्युस्तदुपथिक उपैति स्युर्यदा तत्र सौम्याः। हृतगतनरवस्त्वाप्तिर्यदा जीवशुक्रौ द्रुततरमुपयात्येव स्वदेशे हि पान्थः।

अर्थात् लग्नात् द्वितीये, तृतीयभावेषु सर्वग्रहाः स्थिताः चेत् पथिकाः आगमिष्यन्ति। यद्युक्तभावेषु केवलं शुभग्रह एव भवेत्तर्हि नष्टवस्तुनः प्राप्तिः तथा अपगतवस्तुनः आगमनं भवेत्। यदि केवलं बृहस्पतिशुक्रौ एव पूर्वोक्तभावेषु स्थितौ तर्हि पथिकोऽतिशीघ्रं स्वगृहं प्राप्स्यतीति वक्तव्यम्। परन्तु अस्मिन् श्लोके लग्नात् द्वितीये, तृतीयभावेषु प्रवासीजनागमनाय सर्वेषां ग्रहाणां स्थितिः अनिवार्या नास्तीति अस्माकं विचारः भवति। परन्तु अस्माभिः ज्ञायते यत् लग्नात् द्वितीये, तृतीयभावेषु त्रिचतुर्ग्रहाः स्थिता चेदपि प्रवासस्य आगमनसूचना लभत्येव। यदि सर्वग्रहाणां स्थित्यर्थमङ्गीक्रियते तर्हि श्लोकस्य शेषभागः विरुद्धार्थक एव भवेत्। पण्डितरुद्रमणिः स्पष्टयति यत् लग्नस्य द्वितीये, तृतीयभावेषु केवलबृहस्पतिशुक्रस्थितिरेव यात्राकरणजनान् गृहे स्थापयति नाम नैवगमयतीत्यर्थः। एतेषु स्थानेषु शुभग्रह स्थितश्चेत् नष्टवस्तुनः प्राप्तिः तथा पलायितस्य आगमनं सम्भाव्यते। बादरायणः कथयति यत् लग्नात् द्वितीय-तृतीयभावेषु ग्रहस्थितश्चेदपि यात्री पुनरागमनशीलो भवेत्। केचन ग्रहाः सन्त्यपि शीघ्रगमनमेव सम्भाव्यते।

लग्नाद् द्वितीयभवनं तृतीयं वा ग्रहेण संयुक्तम्।
दूरगतस्यागमनं प्रवृत्तिमथवा विनिर्दिशति।

बादरायणमतानुसारेण लग्नात् द्वितीयतृतीयभावेषु स्थितः ग्रहः अर्थात् पाप अथवा शुभग्रहश्चेत् प्रवासजनागमनसूचना दीयते। वराहमिहिरमतानुसारेण एवं भवति - लग्नतः सहजपुत्रवित्तगा दूरगागमनशंसितो ग्रहाः। नष्टलम्भनकराः शुभग्रहाः शीघ्रमागमकरौ तु मन्त्रिणौ। लग्नात् तृतीये, पञ्चमे एवं द्वितीयस्थानेषु ग्रहस्थिते तर्हि प्रवासी जनागमनमभि लक्ष्यते। एतेषु स्थानेषु स्थित शुभग्रहः नष्टप्रदार्थस्य लाभं करोति तथैव शुक्रश्चेत् शीघ्रागमनं भवेत्। अस्य श्लोकस्य व्याख्याकरणसमये ''डॉ. शुकदेवचतुर्वेदीमहाभागः'' कथयति यत् - एतेषु स्थानेषु शुभग्रहभवेत्तर्हि गृहात् पलायिताः, अदृश्यजाताः जीवाः गृहं शीघ्रमागमिष्यन्ति। निर्जीवपदार्थाः अस्मिन् योगे नैव लभ्यन्ते एव। तेषां सर्वानुसारेण एतेषु योगेषु कुटुम्बस्य, भ्रातुः, बन्धु एवं सन्तानस्य प्रीतिकारणेन व्यक्तिः स्वदेशानयनप्रभावशालीं भूमिकां पोषयति। आर्यासप्ततिग्रन्थे एवं कथितम् -

दुश्चिक्यधनसमेतौ गुरुशुक्रावागमं न्नृणाम्।
बन्धूपगतावेतौ गृहप्रवेशं क्षणात्कुरुतः।

प्रश्नलग्नात् तृतीये तथा द्वितीयभावेषु गुरुशुक्रौ भवेताम् तदा परदेशीजनागमनं सम्पद्यते। यदि गुरुशुक्रौ चतुर्थभावे स्थितौ तर्हि परदेशीजनाः अतिशीघ्रमेव गृहं प्राप्स्यन्तीति वक्तव्यम्। पण्डितरुद्रमणिः लग्नात् द्वितीयतृतीयभावविषये कथयति। परन्तु अन्याचार्याः द्वितीय-तृतीयभावविषये वदन्नपि लग्नं ते नैव अङ्गीक्रियन्ते। केचन द्वितीयतृतीयाभ्यां सह पञ्चमभावमपि अस्मिन् योगे स्वीकुर्वन्ति। परन्तु दैवज्ञजीवनाथस्य मतं तु अन्यथा वर्तते -

जीवो वा भार्गवो वाऽपि चन्द्रो वा सुखवेश्मनि।
पथिकं गृहमायान्तं जानीयात् प्रश्नवित्तदा।।7

चतुर्थभावे स्थितः सौम्यग्रहः शीघ्रमेव प्रवासीजनागमनसूचनां ददाति। गमनसम्बन्धप्रश्ने अस्य फलं विपरीतं भवेत्। अर्थात् यात्रीजनस्य अन्यत्रप्रस्थानं नैव सम्भवेत्। किन्तु प्रश्नसिन्धुकारस्य मतमेवं वर्तते - लग्नस्य पार्श्वोपतौ विधोर्वा स्मरस्य वा सौम्यखगौ खगौ वा। एकत्र योगेऽपि गतौ न वेति प्रस्थातुकामो न खलु प्रयाति। लग्नात् चन्द्रः सप्तमभावादद्वितीये तथैव द्वादशस्थाने द्वौ शुभग्रहौ स्थितौ तावपि नान्यग्रहैः युक्तौ चेत् यात्राकामुको जनः यात्रा नैव कर्तुं समर्थो भवेत्। यदि पूर्वोक्तस्थाने गुरुः तथा शुक्रः स्थितस्तर्हि प्रवासी शीघ्रमेवगृहमागमिष्यति। उक्तस्थानेषु अन्यग्रहस्थितश्चेत् प्रवासी दूरदेशं गमिष्यति। परन्तु प्रश्नमार्गग्रन्थे विरुद्धरूपेण उक्तमस्ति यथा -

आरूढे चरभे चतुर्थमृतिगाः सोम्यागृहस्यागमं कुर्वन्त्यर्थसहोत्थगा अपि पुनः प्रस्थाय मार्गागतम्। कर्मेशो विनिवर्तयेन्नवमगो वक्री ततः प्रोषितं मार्गस्थं तमुदीरयेत् द्विष उपेत्यावस्थिते लग्नये।

अर्थ (द्वितीयभाव), सहोत्थ (तृतीयभाव ) एतयोः यदि शुभग्रहश्चेत् प्रोषितव्यक्तिः मध्ये मार्गे आगत्य पुनर्गच्छतीति वक्तव्यम् भवति। कश्चिद्ग्रहः सप्तमगोऽरिगो वा केन्द्रे गुरुश्चागमनं करोति। त्रिकोणगो ज्ञो यदि वा भृगुः स्यात्पांथागमश्चेद्धिमगुर्मृतिस्थः।

# उत्कलेषु संस्कृतचर्च्चा

**सुरमुखरसभोक्त्रे भोगमोक्ष्यैकदात्रे**
**नवनिधिगुणधात्रे स्वात्मविज्ञानगोप्त्रे ।**
**सरलमधुरवक्त्रे लोककल्याणकर्त्रे**
**विपुलसुखविधात्रे संस्कृताय प्रणामः**

उत्कलीयाः संस्कृतप्रियाः । संस्कृतं सार्वभौमिकम् । अमरभाषा-समुज्ज्वलं संस्कृतं न कस्यापि विशिष्ट-जातेरुपकारकं नापि सांप्रदायिकत्वेन परिचितम् , अपितु समेषां मानव-जातीनां मंगलं विधातुं सर्वसमर्थमिति नातिशयोक्तिः । संस्कृतेषु सर्वादौ संगीतशास्त्रं विचार्यते । रसस्वरूपं संगीतम् । यं पीत्वा कृतकृत्यो जायते जनः । भारतीय-संस्कृतौ संगीतस्य स्थानं चरमं परमञ्च । कला-साहित्य-क्षेत्रे संगीतस्य प्राधान्यता दरीदृश्यते । जनजीवने संस्कृतिक्षेत्रे संगीतस्य महती आवश्यकता वर्तते । छन्दोवद्धं पद्यात्मकं लय-तालयुक्तं संगीतं वाद्य-नृत्यादिभिः लोलाय्यि-तम् । उत्कलीय-आर्य-अनार्य-जनजातीनां सर्वेषां संगीतक्षेत्रे अवाधप्रवेशः । ते स्व-स्व भाषामाध्यमेन भावानुकूलं संगीतं रचयन्ति,परिवेषयन्ति च ।

संस्कृतभाषायां संगीतक्षेत्रे महाकवि-जयदेवः सर्वादौ सुपरिचितश्चिरनमस्यः, विश्वप्रसिद्ध उत्कलीयः । तन्निर्मितं गीतगोविन्दं न केवलं श्रीमन्दिरे अपि तु खिलेषु भारतवर्षेषु धर्मग्रन्थरूपेण विवेचितम् । पुरा श्रीजगन्नाथमन्दिरे देवदासी-नृत्यप्रथा प्रचलिता आसीत् । नृत्येन सह संगीतमनिर्वार्यमिति मनसि निधाय महाप्रभोः श्रीजगन्नाथस्य श्रीकृष्णस्वरूपं ध्यायं ध्यायं तन्निर्देशेन च कोमलकान्तपदावलिभिः सुसज्जितं जयदेवो गीतगोविन्दं रचितवान् । पश्चात् परवर्तिनो बद्धपरिकराः कवयः संगीतक्षेत्रे प्रविष्टाः । सफलीभूताश्च । समुत्पन्नेषु कविषु केषांचन नामानि अत्र न विस्मर्तव्यानि ।

कविचन्द्र-राय-दिवाकर-मिश्रेण निर्मितं तत्पृष्ठपोषक-गजपति-पुरुषोत्तमदेव-नाम्ना भणितं दशसर्ग-विशिष्टं 'अभिनव गीतगोविन्दम्' , पञ्चदश-शताब्यां राय-रामानन्देन लिखितं 'जगन्नाथवल्लभ'-नाटकम्, जयदेवाचार्यस्य 'पीयूषलहरी'-एकांकिका, यतीन्द्र-रघुत्तम तीर्थस्य 'मुकुन्दविलास' -महाकाव्यम्, कृष्णदासकृत-'गीतप्रकाशः', नित्यानन्दकविकृत 'शिवलीलामृतम्', तत्कृत-'श्रीकृष्णलीलामृतम्', शतदेव-मिश्रस्य 'मुदितमाधवम्', अनादि-मिश्रस्य 'मणिमाला'-नाटिका-' केलिकल्लोलिनी'- 'रसगोष्ठी' रूपकानि प्रणिधानयोग्यानि भवन्ति । षोडश-शताब्द्यां मोगल-साम्राज्ये सुपरिचित-आकवर-सभापण्डितः संगीतज्ञः कृष्णदास बडजेना महापात्रः 'गीतप्रकाशं' रचितवान् । तस्मिन् समये हलधर मिश्रस्य 'संगीतकल्पलता', हरिचन्दनस्य 'संगीत-मुक्तावली', सप्तदश-शताब्द्यां रघुनाथ रथस्य 'नाट्यमनोरमा' 'संगीतार्णव-चन्द्रिका', नारायण मिश्रस्य 'संगीतसरणिः', कविचन्द्र-पुरुषोत्तम-मिश्रस्य 'तालसर्वस्वः', शार्गंदेवस्य 'संगीतरत्नाकरः', पारलाखेमुण्डिराज-गजपति-जगन्नाथ-नारायणदेवस्य 'संगीतनारायणः', पद्मनाभ-नारायण-देवस्य 'तालसर्वसारसंग्रहः', 'चतुर्दण्डिप्रकाशिका'-'रागचित्रादीनि संगीत-पुस्तकानि रससिक्तानि सन्ति । अष्टादश-शताब्द्यां गोविन्द-कविभूषण-सामन्तरायस्य 'समृद्धमाधव'-नाटकम्, कमल लोचन खड्गरायस्य 'संगीत चिन्तामणिः', 'गीतमुकुन्दम्', व्रजयुवविलासादीनि संगीत-शास्त्राणि च समुद्भवानि । काव्यालंकार-नाटक-एकांकिकादि-क्षेत्रेषु गंजाम-मण्डलाधिप-शेरगड-राज्याधिपति-जनार्दन-प्रोत्साहित-कविना शितिकंठेन द्वादशसर्गविशिष्टं 'गीतसीतावल्लभम्' महाकाव्यं प्रस्तुतम् । द्वादशतताब्द्यां कोणार्क-सूर्य-मन्दिरनिर्मातृ नरसिंह देवस्य सभाकविना विद्याधरेण 'एकावलीनाटिका' विनिर्मिता । विश्वप्रसिद्ध-विश्वनाथ कविराजेन 'साहित्यदर्पणः', 'चन्द्रकला' नाटिका अन्यानि बहुग्रन्थरत्नानि संपादितानि । चण्डिदासेन 'काव्यप्रकाशदीपिका' विनिर्मिता । सान्धि-विग्रहिक-महामहोपाध्याय-सामन्तचन्द्रशेखरेण 'सिद्धान्तदर्पणः' संपादितः । कृष्णानन्द-सान्धिविग्रह-महापात्रेण 'सहृदयानन्द'-महाकाव्यं विरचितम् । राधामोहन बक्सिना 'भारत भ्रमण'-काव्यमकारि । साहित्य क्षेत्रे का-विचन्द्र भुवनेश्वर रथस्य 'लक्षणा परिणयः', वीरबलभद्रपुर शासन निवासिनः मधुसूदन तर्क वाचस्पतेः 'हनुमत्संन्देशः', 'तारा शशांकः', 'मायाशवरी', 'लक्ष्मीशतकं', 'गजशतकं', 'सोमनाथ-शतकानि च प्रसिद्धाः ग्रन्थाः । पुरी-सदाशिव-संस्कृत-संस्थानस्य प्रतिष्ठापकेन अध्यक्ष चरेण आचार्य हरिहर दाशेन च बहुग्रन्थाः विरचिताः । तिगिरिआ-निवासिना भुवनेश्वर-मिश्र-बडपण्डा-महोदयेन 'आनन्द-वृन्दावन-चम्पूः' संकलितः । महामहोपाध्याय सदाशिव मिश्रेण 'चन्दन चम्पूः', 'कल्यापत् धर्मसंग्रहौ' च विरचितौ । सदाशिव-संस्कृत-महाविद्यालय- भूतपूर्वाध्यक्षेण विश्वनाथ-महापात्रेण 'काञ्ची विजयः', 'सरस्वती विलासः', 'सावित्री परिणयः' प्रमुखाः ग्रन्था विलिखिताः । गोपबन्धु विद्याभूषणेन 'रुद्धद्वारः', 'कन्योद-राजवंश चरितम्', 'माठरवंशः' ग्रन्थाः संकलिताः । कविशेखर-आर्त्तत्राण-मिश्रेण 'काशीशदर्पदलनं' प्रस्तूतम् । सुदर्शन-पाठिना 'दीपिका नाठकम्', 'सिंहल विजय नाठकम्', 'करुणा पारिजातः', 'पादुकाविजयः'इत्यादीनि नाटकानि लिखितानि । ब्रह्मपुर-निवासिना अनन्त-त्रिपाठिना 'निबन्धमाला', 'लावण्यवती'- 'वैदेहीश विलासयोः संस्कृतानुवादाश्च ' संपादिताः । पण्डित –प्रबोध-कुमार-मिश्रेण 'मलय दूतम्', 'स्वप्नदूतम्', 'बन्दिन आत्मकथा'दि ग्रन्थाः विरचिताः । एतदतिरिका अर्वाचिनेषु गोपीनाथ-महापात्रस्य 'कालिदास कवितारस-माधुरी', 'जगन्नाथाष्टकम्', 'दीनबन्ध्वष्टकम्', कालिदासाष्टकानि अनुपमानि सन्ति । जगन्नाथ रथस्य 'अनुभूति शतकम्', गोविन्दचन्द्र मिश्रस्य 'जयदेव प्रशस्तिः', हरिहर नन्दस्य 'सिद्धान्त कौमुदी टीका', हरेकृष्ण महतावस्य 'चाणक्य विजयम्', चन्द्रशेखर मिश्रस्य 'जगन्नाथ शतकम्', जयकृष्ण मिश्रस्य 'मातृमुक्ति मुक्तावली', बानाम्बर आचार्यस्य 'केन्दुझर राजानः चरितम्', सीतादेवी खाडंगायाः 'अरण्यरोदनम्', विश्वनाथ वर्मणः 'श्रीवर्म रुक्मिणी परिणयः', राधानाथ रायस्य 'भारती वन्दना', वाउरी बन्धु नन्दस्य 'मनोदूतम्', दयानिधि मिश्रस्य 'सूर्यदूतम्', नीलकंठ वाचस्पतिनः 'गंगाधर चम्पूः', सुदर्शन मिश्रस्य 'सुदर्शनानन्द चम्पूः' , गोपीनाथ दाशस्य 'श्रीदाश पुष्पाञ्जलिः', मदनमोहन करस्य 'ग्रहयाग पद्धतिः', त्रिविक्रम पतिनः 'गोपबन्धु स्मृतिः', जगन्नाथ रथस्य 'नागरिकमुद्बोधनम्', विषकंठ वाचस्पतिनः 'वाणीविलासः', कामाक्षी प्रसाद शर्मणः 'कामाक्षी स्तोत्र रत्नमाला', लडुकेश्वर शतपथिनः 'कालिदास दशकम्', गोपीनाथ रथस्य 'विधिविडम्बनम्', कृष्णचन्द्र आचार्यस्य 'सुकवि महिमा', गुणनिधि त्रिपाठिनः 'पुरुषोत्तम माहात्म्यम्', कुरामणि पाठिशर्मणः 'नियति' पत्रिकायां लिखित-श्लोकाः, गणेश्वर रथस्य 'लिंगराजायतनम्', आनन्द महापात्रस्य 'श्रीराधिका प्रपत्तिः', वासुदेव महापात्रस्य 'सावित्री परिणयम्', रमाकान्त मिश्रस्य 'महात्मागान्धीः', हरेकृष्ण शतपथिनः 'कविशतकम्', 'गंगाजल दूषितम्', वनमालि-विश्वालस्य 'ऋतुपर्णा', 'जिजिविषा', 'विवेकलहरी', 'व्यथा', 'दारुब्रह्म', 'प्रियतमा'-प्रमुखाः ग्रन्थाः, केशव चन्द्र दाशस्य 'प्रणय प्रदीपम्', 'हृदयेश्वरी', 'महातीर्थम्', 'अलका', 'ईशा', 'भिन्न पुलिनम्', 'प्रतिपत', 'निकषा', 'ऋतम्', 'विसर्गः','शशिरेखा', 'ॐशान्तिः', प्रमुखाश्च बहुग्रन्थाः, हरेकृष्ण मेहेरस्य बहव अनुवादित-ग्रन्थाः, प्रदीप्त नन्दस्य 'श्रीक्षेत्रसुधानिधिः', 'श्रीजगन्नाथ दर्शनम्', 'भक्तिनिर्झरिणी', 'शिवाच्चर्न प्रदीपाः' ग्रन्थाः, दिगम्बर महापात्रस्य 'उत्कलोदयः', 'सुरेन्द्र चरित महाकाव्यम्', 'ऋतुचक्रम्', 'भवते रोचते यथा', 'रंगरुचिरम्', 'व्यस्तरागम्' ग्रन्थाः, वैकुण्ठ विहारिनन्दस्य 'शरणागति स्तोत्रम्' महामहोपाध्याय-पण्डित-गोविन्द चन्द्र मिश्रस्य 'श्रीसारला शतकं', 'वैजयन्ती शतकं', 'प्रसेन विजय चम्पूः', 'श्रीराम लीलामृतम्', 'वदनचन्द्र-प्रकाशिका'दयो ग्रन्थाः, प्रमोद चन्द्र मिश्रस्य 'उत्कलगौरवम्', 'अन्योक्ति पञ्चाशिका', 'मूर्खशतकं', 'व्योमयान शतकं', 'चन्द्रदूतम्', चान्यानि काव्यरत्नानि च सन्ति । उपर्युक्ताः संस्कृतज्ञाः उत्कलेषु शास्त्रिय-काव्य-संगीत-नाटक-अलंकार-गान्धर्व-एकांकिका-अभिनय-कला-संस्कृति-साहित्यादि-क्षेत्रेषु प्रशंसनीया भवन्ति ।

वैदिकक्षेत्रे अथर्व वेदस्य 'पैपल्लाद शाखा' उत्कलेषु संगृहीता । भौम-सोमवंश-राजत्वसमये मुरारिकविना 'अनर्घ राघव'-नाटकं प्रणीतम् । आचार्य-शतानन्देन 'भास्वती' प्रकाशिता । तदतिरिक्तौ तेन 'शतानन्द रत्नमाला', 'शतानन्द संग्रहः'-नामकौ गन्थौ विरचितौ । पुरुषोत्तमदेवस्य राजनि वैष्णवधमी विस्तारितः । अस्मिन् समये धर्म-प्रचार-क्षेत्रे श्रीधरस्वामी, रघुत्तम तीर्थः, आनन्दगिरिः, राय रामानन्द-प्रमुखाः उत्कलीयाः वरेण्या-वैष्णवाः स्व स्व कार्याणि संपादितवन्तः ।

तक्षशिलायाः प्रधानाचायी माध्यमिकवादि-बौद्धनेता नागार्जुनोऽपि उत्कलीयः इति ऐतिहासिका निरूपयन्ति । पुरीमण्डलमण्डितः आर्या सप्तशत्याः लेखको गोवर्धनाचार्यः प्रसिद्धः। तदतिरिक्ताः नीलाम्बर आचार्य-उदयनाचार्य-बलभद्रादयो विद्वांसः उत्कलजननीं कृतार्थीकृतवन्तः । धर्मशास्त्रक्षेत्रेषु गंगवंश-युगीयाः वाजपेयिनः अग्रगण्याः । तेषु भारद्वाजगोत्र-शम्भुकर वाजपेयी प्रसिद्धः । तत्कृतिषु 'अग्निहोत्र होमपद्धतिः', 'अग्निहोत्रहोमः', 'प्रायश्चित पद्धातिः', 'दर्श-पौर्णमासेष्टि पद्धतिः', 'दुर्बलकर्म पद्धतिः', 'निरुढ पशुयाग पद्धतिः', 'स्मार्त्तरत्नावली', प्रमुखाः ग्रन्थाः विश्व- प्रसिद्धाः । 'शम्भुकर पद्धतिः' अस्य महान् धर्मशास्त्रिय-ग्रन्थः । त्रयोदश-शताब्दीय- विद्याकर वाजपेयिना अष्टभागात्मको नित्याचार पद्धतिर्विनिर्मिता । अधुना एसिआटिक् सोसाइट् द्वारा प्रकाशिता च । विद्याकरस्य प्रियशिष्य-रामचन्द्र वाजपेयिना नैमिष्यारण्ये बहुकालं संन्यस्य बहुग्रन्थाः विरचिताः ।

महाराज-पुरुषोत्तम-देवेन 'अभिनव गीतगोविन्दम्', 'मुक्तिचिन्तामणिः', 'गोपालार्चनपद्धतिः', 'नाममालिका', 'आनन्दविलासः', 'दशग्रीव वधः', 'जानकी प्रमोदः', 'कुवलयाश्वचरितम्', 'अभिनव वेणीसंहारम्', 'दुगीत्सवः', 'भुवनेश्वरी पूजा', एवमन्ये ग्रन्थाः विरचिताः । विंशति-सर्गात्मकं 'दशग्रीव वध'-नाटकं कवीन्द्र-मार्कण्डेयस्य कृतिरिति केचन मन्यन्ते । तेन पुरुषोत्तमदेवस्य नाम्ना भणितम् । पञ्चदश-शतकस्य मुकुन्ददेवस्य सभापण्डितेन कृष्णदास-बडजेना-महापात्रेण 'गीतप्रकाशकः' ग्रन्थो विरचितः । पुरुषोत्तम-मिश्रेण 'नीलाद्रिनाथ-शतकम्', नैषधचरित टीका-प्रसूतं 'भागवत महाकाव्यम्' , 'रामचन्द्रादय काव्यम्', संगीतनारायणादीनि बहुशास्त्राणि विरचितानि । अष्टादश-शताब्दि-मण्डित-पण्डित-कौण्डिन्य-गोत्रिय-रघुनाथ-दाशेन बहुग्रन्थाः संकलिताः । तेषु 'भट्टीकाव्य-टीका', 'साहित्य-भूषणम्', 'वृत्तावलिः', 'कालनिणय्यः', 'श्राद्धनिणय्यः', 'उत्पात तरंगिणी', 'न्याय रत्नावलिः', 'रघुवंश टीका', 'अमरकोशटीका', 'काव्यप्रकाश टीका', 'शिशुपालवध टीका', 'वनदुर्गा पूजा', 'बर्द्धमान प्रकाशः', 'कारक निणय्यः', 'वैद्य कल्पलता', 'सार सिद्धान्त संग्रहा'ख्याः व्याकरणग्रन्थाश्च प्रसिद्धाः वर्तन्ते । हरेकृष्णपुर शासन-निवासिना गदाधर-राजगुरुणा 'गदाधरपद्धतिः' संपादिता । अष्टादशाध्यायविशिष्टोऽयं ग्रन्थः संप्रति अष्टाध्यायविशिष्टतया उपलभ्यते ।

नाटकक्षेत्रे भट्टनारायणः श्रेष्ठनाटककारः । तेन 'वेणीसंहार'-नाटकं विलिखितम् । राज्ञः कपिलेश्वरस्य 'परशुराम विजयः', नारायणानन्दस्य 'श्रीरामचन्द्रानन्दम्', जीवदेव-पुत्रस्य द्वितीय जयदेवस्य 'पीयूष लहरी नाटिका', 'वैष्णवामृत नाटकम्', च प्रमुखानि सन्ति ।

अभिधान-क्षेत्रे पुरुषोत्तमदेवस्य 'त्रिकाण्ड शेषः', 'हारावली', मेदिनीकरस्य 'मेदिनी' कोशाः श्रेष्ठाः।

व्याकरण-क्षेत्रे मार्कण्डेय मिश्रस्य 'प्राकृत सर्वस्वः', जुमरस्य 'जुमर व्याकरणम्', रामभद्रस्य 'सिद्धान्त चन्द्रिका', अनुभूति स्वरूपाचार्यस्य 'सारस्वत व्याकरणम्', 'प्रबोध चन्द्रिका'दीनि दृष्टिपथे विलसन्ति ।

तन्त्रग्रन्थेषु 'उड्डियान तन्त्रम्' 'उडभास्वर तन्त्रम्' 'उड्डिश' तन्त्राणि च उत्कलेषु विनिर्मितानि । अन्येषु तन्त्रग्रन्थेषु गोदावर मिश्रस्य 'यन्त्र चिन्तामणिः', 'शारदाच्चर्न पद्धतिः', पुरुषोत्तमदेवस्य 'भुवनेश्वरी पल्लवः', 'प्राकृत चण्डी', विद्याधर बाजपेयिनः 'शक्ति प्रतिमा प्रतिष्ठा', वर्द्धन महापात्रस्य 'दुगीत्सव चन्द्रिका', वासुदेव रथस्य 'भुवनेश्वरी प्रकाशः',लक्षेश्वर रथस्य 'ज्ञानावली' तन्त्राणि च स्मर्तव्यानि ।

दर्शनक्षेत्रेऽपि उत्कलीया धुरन्धरा आसन् । ज्ञानसिद्धेः कर्ता इन्द्रभूतिः, बौद्ध-दार्शनिको धर्मकीर्त्तिः, नागार्जुनादयश्च उत्कलीय- सन्तानाः आसन् । श्रीधरस्वामिनः 'गीता-भागवत टीके' प्रसिद्धे । वालेश्वर-रेमुणा-भूमिगौरवस्य बलदेव विद्याभूषणस्य ब्रह्मसूत्रोपरि 'गोविन्दभाष्यम्' प्रसिद्धम् । एतदतिरिक्तं तेन 'ऐश्वर्यकादम्बिनी', 'प्रमेय रत्नावली', 'लघुभागवतामृतम्', 'काव्यकौस्तुभः', 'विष्णुसहस्रनाम भाष्यम्', 'सिद्धान्तरत्नम्', 'भगवद्गीताभाष्यम्', वेदान्त स्यमन्तकादयः बहुग्रन्थाः विरचिताः । जगन्नाथ रथस्य 'जैनदर्शनम्', लोकनाथ शास्त्रिणः 'सिद्धान्त मुक्तावली टीका', दामोदर महापात्रस्य 'सर्वदर्शन कौमुदी', 'योगतत्त्व वारिधिः', प्रो0नीलकंठ-पतेः 'सामान्य-दर्शनम्', 'दर्शनेषु तत्त्वचतुष्टयम्', शिवाच्चर्नपद्धत्यादयो ग्रन्था अनुपमाः । प्रो0 प्यारीमोहन पट्टनायकस्य 'न्याय परिभाषा', 'न्यायसूत्र वात्स्यायन भाष्यस्य रैखिक प्रतिनिरूपणम्', 'वैशेषिकसूत्रोपस्कारस्य रैखिक प्रतिनिरूपणम्', 'मीमांसा परिभाषायाः रैखिक प्रतिनिरूपणम्', 'सांख्यकारिकायाः रैखिक प्रतिनिरूपणम्', 'वेदान्तसारस्य रैखिक प्रतिनिरूपणम्' इत्यादयो ग्रन्थाः प्रसिद्धाः रेखाचित्रपरकाः सन्ति । प्रो0 प्रलय कुमार नन्दस्य 'योगलक्षण-विमर्शः', 'अक्षपादीय-कणादीय-दर्शनयोः जातिस्वरूपविमर्शः' इति द्वौ ग्रन्थौ प्रसिद्धौ ।

गवेषणाक्षेत्रे डः सत्यनारायण राजगुरुः, केदार नाथ महापात्रः, ऐतिहासिको विनायक मिश्रः, पण्डित नीलकंठ दाशः, कृष्णचन्द्र राजगुरुः, अध्यापक-भगवान-पण्डादयः उत्कलीय-विद्वांसः अग्रगण्याः राजन्ते । केचन ऐतिहासिकाः कालिदास-दिङ्नागौ, उत्कलीयौ इति समामनन्ति, तन्मृग्यम् । अन्ततो गत्वा संस्कृतं प्रति उत्कलीयानां अवदानं चिरस्मरणीयं न विस्मरणीयमित्युक्त्वा लेखं समापयामि । अलमतिविस्तरेण । जयतु संस्कृतम् । जयतु उत्कलम् । जयतु भारतम् ।

**नन्दप्रदीप्तकुमारः**

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा
॥श्री राम कथा॥

**रामाय रामभद्राय रामचन्द्राय वेधसे।**
**रघुनाथाय नाथाय सीतायाः पतये नमः॥**

तदन्तरं श्रीहनुमान् महाभागः विप्ररूपमवधार्य तत्र गतस्तथा शीशं नत्वा पृष्टवान्- हे रूपवन्तौ ! भवन्तौ कौ स्तः क्षत्रियरूपाभ्यां निर्भयं भूत्वा विचरन्तौ स्तः। अत्र भूमिरतिकठोरा वर्तते किन्तु तदपि भवन्तौ पादत्राणविहीनाभ्यां कोमलपदाभ्यां कस्मात्कारणात् वने समागतवन्तौ स्तः। श्रीहनुमान् श्रीरामं मधुरस्नेहयुक्तवचनेन पृच्छति, श्यामगौरशरीररुपधारिणौ भवन्तौ कौ स्तः। भवद्शरीरसंरचना मृदुला सुन्दरी मनोहारिणी च वर्तते। भवन्तौ नरनारयाणौ च स्तः वा त्रिदेवाः सन्ति, कृपया स्वपरिचयं प्रकाशितं कुरुताम्।
हे दयासिन्धो! क्वचिद् भवान् सच्चिदानन्दघनो जगदाधारः श्रीहरिः त्वस्ति, यः पृथ्वीदेव्याः कष्टं दूरीकर्तुमवतारमधारयत्। श्रीहनुमद्वचनं श्रुत्वा यथा यथा श्रीहनुमान् प्रश्नं कृतवान् तथैव श्रीरामः समाधानं कृतवान्। हे विप्रदेव! आवामयोध्यानरेश महाराजदशरथस्य पुत्रौ स्तः। पित्राज्ञानुसारमत्र वनं समागतवन्तौ स्तः। मम नाम रामो वर्तते तथा अयं मदनुजः श्रीलक्ष्मणो वर्तते। मम भार्या भगवती सीतापि अत्र मया सह आगतवती। किन्तु अत्र वने राक्षसाः मद्भार्याया अपहरणं कृतवन्तः। तामन्वेषणं कुर्वन्तौ आवां भ्रमन्तौ स्तः। हे विप्रवर्य! अहं स्वविषये स्वचरित्रमुक्तवान्। अधुना भवान् स्वपरिचयं वदेयुरिति निवेदये। एतच्छ्रुत्वा श्रीहनुमान् महाभागः श्रीरघुनन्दनस्य चरणकमलयोः सादरं नत्वा कथितवान्। हे भगवन्! भवन्तं ज्ञातुं महात्रुटिः जाता। क्षम्यताम्।

**-क्रमशः**

आचार्य अरविंद पांडेय

## ज्योतिषामयनञ्चैव वेदाङ्गानि षडवे तु

एतेषां षण्णां महत्त्वं निरीक्ष्यैव

पाणिनीयशिक्षायां प्रतिपाद्यते यत् - छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते। ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते। शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्। तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते। मुण्डकोपनिषदि परापरयोविद्ययोः वर्णनं समुपलभ्यते। यथा चाह श्रुतिः - 'तस्मै होवाच। द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च।। तत्रापरा, ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति। अथ परा यथा तदक्षरमधिगम्यते।।'6

षण्णां वेदाङ्गानां निर्माणेन भारतीयसाहित्यस्य विकासे एकस्य नवीनस्य युगस्य प्रारम्भो भवति। षट्शास्त्रशब्देनाभिधीयन्ते। तत्र षडङ्गेषु शिक्षाशास्त्रमन्यतमम्। तस्य स्वरूपम् उपयोगश्च विषये प्रबन्धोऽयं विरच्यते। तैत्तिरीयोपनिषदि 'अथ शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानः।

प्रेरणाश्रोत

जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।

संरक्षक मण्डल

योग गुरू स्वामी आनन्द गिरि जी
(बांध स्थित बड़े हनुमान जी )

डॉ भगवत् शरण शुक्ल
प्रोफेसर-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

प्रमोद बंसल
निदेशक-महारानी चाय, प्रयागराज

सलाहकार

श्रीमती अनामिका चौधरी
(सदस्य राज्य महिला आयोग)
डा. पुष्पा पाल (एमजीएम हास्पिटल)
- सुनील सराफ
(अवतार केमिस्ट)
-पं. देवेन्द्र प्रसाद त्रिपाठी
-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी
-डॉ. शम्भुनाथ त्रिपाठी (अंशुल)
-डा. मोरार जी त्रिपाठी
-बृजेन्द्र नन्दन दास
(डायरेक्टर इस्कॉन नेशनल कम्युनिकेशन वाइस प्रेसिडेंट नवदेहली)
-महेश जी कपूर
डा. कृष्णानन्द पाण्डेय
फादर - थॉमस कुमार
उपसम्पादक - विनम्र शुक्ल
विशेषवार्ताहरः
डॉ प्रदीप्त कुमार नंदः

प्रयागराज ( इलाहाबाद )

RNI No. : UPSAN/2018/76680

स्वामी मुद्रकः प्रकाशकश्च **आनन्द नारायण शुक्ल** द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

संपादक-राकेश शर्मा



## सुरभारती-सप्तकम्

ललितं तव चिन्तनकोमलितं
कलितं रसनातटशीतलीतम् ।
वलयीकृतमंगलपुंगवरं
सुरभारति हे तव नाम चिरम् 1

भरलोलितलोचनशान्तिचिरं
चिरचञ्चलनिर्मलधामकलम् ।
कलभाषितकाशितकाव्यपरं
सुरभारति हे तव नाम चिरम् 2

मनसार्चितवाचनसारलितं
निगमागमकारणकारुणिकम् ।
गुणगुम्फितगर्जनगञ्जधरं
सुरभारति हे तव नाम चिरम् ?3

मधुपंकजगुच्छितकेशतलं
तलवाद्यनिनादितसौख्यकरम् ।
करकंकणगर्जितरागपरं
सुरभारति हे तव नाम चिरम् ?4

वचनामृतभास्वरभारभरं
भरणीकृतभारततत्त्वपरम् ।
परमाश्रयदायकयोगकरं
सुरभारति हे तव नाम चिरम् ?5

चिरसुन्दरभूषितभावपरं
परमार्थसरोवरपानकरम् ।
करकुंकुमरंजितमंजुधरं
सुरभारति हे तव नाम चिरम् ?6

भुविभावुकसज्जनभावपरं
हृदि शीतलमञ्जुलशान्तिधरम् ।
मुखपंकजनिर्गतनन्दतरं
सुरभारति हे तव नाम चिरम् ?7

**डः प्रदीप्त कुमार नन्दः**
**ओडिशा, केन्द्रापडा**

## व्याकरण-चातुर्य्यम्

**प्रश्नः-** प्रायेण करोना कं हन्तुमिच्छति

**उत्तरम्-** अर्थवदधातुरप्रत्ययः प्रातिपदिकम्।

**अस्यार्थः-** पदं पदं स्थानं स्थानं प्रति इति प्रतिपदम्। प्रतिपदे भवं प्रातिपदिकम्। समग्रस्य विश्वस्य प्रातिपदं परिव्याप्तेयं करोना प्रातिपदिकरूपा भवति। सा जिघांसति-

1. अर्थवन्तम्। धनवन्तं जनमित्यर्थः। भिक्षुका राजपथे शयाना जना दरिद्रा वा न हन्यन्ते अनया प्रायेण, संवादपत्रे दूरदर्शने प्रचारितासु वार्त्तासु तद्विषयकवृत्तान्ताना-मनुपलम्भात्।
2. अधातुम्। रोगप्रतिरोधकशक्ति (Immunity )रहितं जनमित्यर्थः।
3. अप्रत्ययम्। प्रत्ययो नाम विश्वासः। स च आत्मनि ईश्वरे च। ये जनाः संशय्य दूरदर्शनादिषु तिष्ठन्ते, तेषां भीतिमृतानां विश्वास आत्मनि क्षयमेति। का कथा परमात्मनि विश्वासस्य ? ततश्च तादृशं गलितविश्वासं जनमित्यर्थः। तदुक्तम्- अर्थवन्तमधातुञ्चाप्रत्ययं प्रायशो जनम्। प्रातिपदिकरूपैषा करोना वै जिघांसति।।

परिहासविजल्पितं सखे परमार्थेन न गृह्यतां वचः।

**डः हरेकृष्ण पट्टयोशी सहायकाचार्यः**

## प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते

इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेदः। अत एव महर्षिणा सायणाचार्येण कृष्णयजुर्वेदीय भाष्यभूमिकायां परिभाषारूपमिदं पद्यमुपन्यस्तम् - प्रत्यक्षेणानुमित्या वा यस्तूपायो न विद्यते। एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता। 'वेदोऽखिलो धर्ममूलम्' इति महामानवेन मनुना सम्पूर्णस्य धर्मस्य मूलत्वेन वेदा एवोपन्यस्ताः। यथा- अर्थकामेष्वशक्तानां धर्मज्ञानं विधीयते। धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः। वेदस्तु महान् निधिर्देशस्य। भारतमातुः प्राणाः खलु वेदाः। स च वेदः शब्दरूपो मन्त्रब्राह्मणात्मकः। तस्य च वेदस्य शब्दरूपस्य अर्थनिर्णयाय पूर्वमीमांसा उत्तरमीमांसा च ग्रन्थे प्रवृत्ते। ताभ्यामपि धर्म-ब्रह्मपरम्पराभ्यां पूर्वोत्तरमीमांसाभ्यां वेदार्थ निर्णयो न सम्यक्तया निष्पन्न इति हेतोर्वेदस्य षडङ्गानि स्वीकृतानि। तै शब्दरूपैः षडङ्गैर्वेदस्य पदवाक्यात्मकस्य शब्दरूपस्य सकलज्ञानराशेरर्थनिर्णयो भवति। अत एव महाभाष्यकारेण पतञ्जलिना उक्तम् – 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति। वेद एकोऽपि सन् उपाधिभेदेन तु चतुर्विधः ऋग्यजुःसामाथर्वभेदात्। यद्यपि त्रय एव वेदाः अत एव वेदत्रयीति प्रोच्यते। तथापि याज्ञिककर्मभेदेन मन्त्राणां भेदमाश्रित्य चत्वार एव बोध्यम्। स चोपाधिवशाच्चतुर्विधभेदवान् वेदः षडङ्गानि। कानि षडङ्गानि इति जायमानायां जिज्ञासायाम् - शिक्षाकल्पो व्याकरणं निरुक्तं छन्दसा च यः।